यदज्ञानतो भाति विश्वं समस्तं
विनष्टं च सद्यो यदात्मप्रबोधे ।
मनोवागतीतं विशुद्धं विमुक्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ४ ॥

**यदिति ।** यद्यस्य ब्रह्मणोऽज्ञानतो विश्वं स्फुरति तदेव ब्रह्माऽहमिति सम्बन्धः । यथा यावन्नीलपृष्ठिकादिशुक्तिज्ञानं नोत्पद्यते तावद्रजतज्ञानं सत्यमिव स्फुरति तथैव यावत्सच्चिदानन्दात्मकं ब्रह्म साक्षान्नानुभूयते तावद्विश्वं मिथ्याभूतमपि सत्यवद्भ्रान्त्या भासते प्रतीयते ॥ यद्यस्मिन्नात्मप्रबोधे महावाक्यश्रवणानन्तरं ब्रह्मैवाहमिति साक्षात्कृते सति सद्यस्तत्क्षणमेव समस्तं विश्वं देहादिव्यवहाररूपं विनष्टं भवति स्वस्वरूपे ब्रह्मणि स्थितानां जडोन्मत्तवदाचरितानां न स्फुरति इत्यर्थः । तथाचोक्तं भागवते

देहं विनश्वरमवस्थितमुत्थितं वा
सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ॥
दैवादुपेतमथ दैववशादपेतं
वासो यथा परिहितं मदिरामदान्धः । इति ॥

प्रारब्धप्रेरितेन प्राणवातेन शुष्कपर्णवत्तस्य चेष्टा भवतीत्यर्थः । तदेव ब्रह्म विशिनष्टि-मनोवाग्भ्यामुल्लङ्घितं अविषयमिति "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतेः । विशुद्धं मायातीतं निरञ्जनं विमुक्तं कर्तृत्वाद्यनात्मधर्मरहितं परंब्रह्म यद्वासुदेवाख्यं तदहमिति तात्पर्यार्थः ॥

ननु जगन्निराकरणेन किं स्यादित्यत आह ।

निषेधे कृते नेति नेतीति वाक्यैः
समाधिस्थितानां यदाभाति पूर्णम् ।
अवस्थात्रयातीतमद्वैतमेकं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ५ ॥

निषेध इति । यद्ब्रह्म समाधिस्थितानां पूर्णमाभाति तदेव ब्रह्माहमिति सम्बन्धः । नेतिनेतीतिश्रुतिवाक्यैर्निषेधे कृते निरुपाधिके स्वरूपे कल्पितोपाधौ निरस्ते सति स्वाभाविके समाधौ वर्तमानानां परमहंसानां निवृत्तसर्वैषणानां विगलिताहंममाभिमानानां शुद्धतत्वे निमग्नवृत्तीनां जीवन्मुक्तस्वरूपाणां पूर्णं भाति ब्रह्मत्वेनैव सर्वं पश्यतीत्यर्थः । यथान्धकारादौ रज्जुरूपमविज्ञाय कश्चिद्भ्रमाद्रज्जौ सर्पं

पश्यति । नायं सर्पः किन्तुरज्जुरेवेति निषेधे कृते रज्जुरेव दृढीभवतीति तद्वदित्यर्थः । तथाचोक्तं

देहाभिमाने गलिते विज्ञाते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ इति ॥

अवस्थात्रयातीतं जाग्रन्नाशे स्वप्नसाक्षित्वेन स्वप्ने तिष्ठति । स्वप्नाभावे सुषुप्तौ तिष्ठति तदभावे तुरीयं भवतीत्यतीतं "असङ्गो ह्ययं पुरुष" इति श्रुतेः । तथाऽद्वैतं न हि तार्किकादेरीश्वरवत्तटस्थविषय-मित्यर्थः । एकं सजातीयादिभेदरहितं यत्परं ब्रह्म विकल्पिताधिष्ठानं तदेवाहम् ॥ ५ ॥

आत्मसत्ताव्यतिरेकेण जगदभावमुपदिशति—

यदानन्दलेशैः समानन्दविश्वं
यदाभाति सत्वे तदाभाति सर्वम् ।
यदालोचने हेयमन्यत्समस्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ६ ॥

**यदिति**। यद्यस्यानन्दस्वरूपस्य ब्रह्मणो लेशैः समानन्दविश्वं तदेव ब्रह्माहमिति सम्बन्धः । लेशैरस्ति भाति प्रियं इत्यंशत्रिकैः नामरूपात्मकं जडं विश्वं सुखात्मकवत्स्फुरतीति । यद्यस्मिन् ब्रह्मण्याभाति सत्वे सत्यस्वरूपे प्रकाशमाने सति तदा पश्चाद् । भ्रमवशात्स्थाणाविव पुरुषः कल्पितं सर्वं विश्वमाभाति । भ्रमे निवृत्ते तु ब्रह्मैव सत्यस्वरूपं ब्रह्मणः पृथक् तदा विश्वं नास्तीत्यर्थः । तथा च मृगतृष्णिकायाश्च जलं गृहीत्वा गगनारविन्दं च विषिच्य कश्चित् पश्चात्सुगन्धिवनं पश्येत्प्लानमेव सखे चात्र प्रतिष्ठ इति ब्रूयादिति । यद्यस्मिन्ब्रह्मण्यालोचने श्रवणमनननिदिध्यासनैः साक्षात्कृते सति अन्यद् यद्भ्रमदशायां सत्यमिव भाति तत्समस्तं हेयं ब्रह्मव्यतिरेकेण नादरणीयमित्यर्थः । यत्परं ब्रह्म तदेवाहमिति योजना ॥ ६ ॥

अध्यारोपावस्थायां तस्यैव ब्रह्मणः सृष्ट्यादिकारणत्वं दर्शयति—

अनन्तं विभुं सर्वयोनिं निरीहं शिवं सङ्गहीनं यदोङ्कारगम्यम् ।
निराकारमत्युज्ज्वलं मृत्युहीनं परंब्रह्म नित्यं तदेवाहमस्मि ॥ ७ ॥

**अनन्तमिति**। यदनन्तं देशकालवस्तुपरिच्छेदशून्यं ब्रह्म अत एव विभु व्यापकं तद्ब्रह्म सर्वयोनि भवति । अधिष्ठानातिरिक्तस्य कल्पितस्याभावात् मायाप्रकाशकत्वाजगत्कारणत्वं "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इति श्रुतेः । ननु तस्य जगत्कर्त्तुर्ब्रह्मणोऽपि पुण्यपापसम्बन्धः स्याद्विषमभूतकर्तृत्वादित्यत आह—**सङ्गहीनमिति** कर्तृत्वाभिमानरहितं यस्य कर्त्तुरहङ्करोमीत्यभि-

मानो भवति तस्यैव पुण्यादिसम्बन्धः। यतो निरीहं निर्गतेहा फलेच्छा यस्मात्तत्। न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहेति स्मृतेः। लिम्पन्तीति देहारम्भकत्वेन न बध्नन्ति शिवं मङ्गलात्मकं ॐकारस्य कार्यभूतैर्वेदान्तशास्त्रैरवगम्यमानत्वादित्योङ्कारगम्यत्। यद्वा योगबलेन हृदयपुण्डरिके मनो निरुध्य प्रणवोच्चारपूर्वकेन ध्यानेन ज्योतिस्फुरणमित्योङ्कारगम्यम्। "ज्योतिः पश्यन्ति युञ्जाना" इति भारते। यद्वा प्रणवोपासनया कालान्तरे ब्रह्मलोकं प्राप्य ब्रह्मणा सह मुच्यते इति। तथा च

ॐ मित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।
यः प्रयाति त्यजन्देहं स याति परमां गतिम्॥

इति निराकारं निरुपाधिकं अत्युज्ज्वलं स्वप्रकाशं मृत्युहीनं जन्ममरणाद्यनात्मधर्मात् हीनं रहितम्॥ ७॥

ब्रह्मानन्दे निमग्नस्य बुद्धिर्विषयानन्दे न भवतीत्याह।

यदानन्दसिन्धौ निमग्नः पुमान्स्याद-
विद्याविलासः समस्तः प्रपञ्चः।
तदा न स्फुरत्यद्भुतं यन्निमित्तं
परं ब्रह्म नित्यं तदेवाहमस्मि॥ ८॥

**यदिति**। यद्यस्मिन्नानन्दसमुद्रे ब्रह्मणि पुमान् परमहंसस्तदाकारया वृत्त्या निमग्नः स्यादिति तदा-ह्येवाविद्याकार्यं समस्तप्रपञ्चविस्तारो न स्फुरति विषयानन्दस्य भानमेव नास्ति तदा प्रीतिर्दूरे। यथा दिवान्धानामुलूकादीनां पुरुषादिव्यवहारो न भासते एवं परमानन्दसमुद्रे निमग्नस्य परमहंसस्य जीवन्मुक्तस्योन्मीलितनयनस्य जगन्न भासत इत्यर्थः॥ तथा च

कारकव्यवहारे हि शुद्धवस्तु न वीक्ष्यते।
शुद्धे वस्तुनि सिद्धे च कारकव्याप्तिः कुतः॥

इति। यदद्भुतं ब्रह्म कर्त्रप्यकर्तृ भोक्त्रप्यभोक्तृ भर्त्रप्यभर्तृ इत्याद्याश्चर्यात्मकं निमित्तं मायाप्रकाश-कत्वेन परमकारणं तदेव ब्रह्माहम्॥ ८॥

अथ पाठकस्य श्रोतुश्च फलमाह—

स्वरूपानुसन्धानरूपस्तुतिं यः
पठेदादराद्भक्तिभावो मनुष्यः।

शृणोतीह वा नित्यमुद्युक्तचित्तो
भवेद्विष्णुरत्रैव वेदप्रमाणात् ॥ ९ ॥

स्वरूपेति । यो मनुष्यो भक्तिभावो भक्तियुक्तचित्तः सन् स्वरूपानुसन्धानपूर्विकां रूपस्तुतिं भेदपर्वतभेदिनीं ब्रह्मविद्यामेतामादरात् प्रीत्या पठेत्सार्थां स्मरेदित्यर्थः । यश्च समाहितचित्तः सन्निह नित्यं शृणोति सोऽत्रैव जीवद्दशायामेव भ्रमरकीटवद्विष्णुर्भवेत् वेदप्रमाणात् ब्रह्म वेद ब्रह्मैव भवतीति प्रमाणात् ॥ ९ ॥

विज्ञाननावं परिगृह्य कश्चित्
तरेदज्ञानमयं भवाब्धिम् ।
ज्ञानासिना यो हि विच्छिद्य तृष्णां
विष्णोः पदं याति स एव धन्यः ॥ १० ॥

इति श्रीमुकुन्दनाम्ना परिव्राजकेन कृता विज्ञाननौकापदव्याख्या समाप्ता ॥

ॐ तत्सत् ।

